प्रभावशोभाधनयौवनानि
न स्युर्नरैके प्रसमीक्ष्य चैतत् ।
अत्यल्पसत्कार्यमसावकुर्वन्
अलभ्यदेहं विफलं करोति ॥ १०२ ॥

सर्वेऽपि वाञ्छन्ति सुखं, परन्तु
कर्मानुरूपो विहितो हि भोगः ।
जम्बूफले केन कृतं हि कार्ष्ण्यं
को वर्तुलं वै कृतवान् कपित्थम् ॥ १०३ ॥

प्राप्तव्यदुःखं न मुनिश्च रुन्ध्यात्
अप्राप्यसौख्यं च न कोऽपि दद्यात् ।
नष्टां तु वृष्टिं क इहानयेत्ता-
मत्यन्तवृष्टिं तु निवारयेत् कः ॥ १०४ ॥

औन्नत्ययुक्ताः पुरुषाः कदाचित्
पदच्युता गौरवहानिमाप्य ।
जीवन्ति गूढप्रभयाऽत्र पूर्व-
कर्मादृते कोऽपि न हेतुरस्ति ॥ १०५ ॥

बहुश्रुताः सार्थकजीवनाश्च
नश्यन्ति शीघ्रं, चिरमत्र मूढाः ।

जीवन्त्यहो "ज्ञानरसेन हीन-
मूढेन किं वे"ति यमोऽत्यजत् किम् ॥ १०६ ॥

दारिद्र्यसन्तप्तमनाः परेषां
गृहं गता भैक्ष्यमटन्ति केचित् ।
नूनं विधिः कारणमत्र, हंस-
भिन्नप्रसूनाम्बुधितीरपाल! ॥ १०७ ॥

अज्ञा न ते, ज्ञानवराश्च, किन्तु
निषिद्धकार्ये क्रियते यदेतैः ।
तत्पूर्वकर्मागतमेव, 'नैदल्'
स्रवन्मधुप्राप्तसुतीरराज! ॥ १०८ ॥

सर्वैस्तु दुःखेन विना प्रमोद-
मात्रं सदा तैर्ह्रियते, परन्तु ।
अप्रार्थितं खेदसुखद्वयं च
क्रमेण कर्मानुगुणं लभेत ॥ १०९ ॥

जातस्य शीर्षे लिखितं स्वकर्म
न क्षीयते नापि विवर्धते तत् ।
क्रमात् फलेत् नोपकरोति दुःखे
काले फलेत् मुञ्च वृथा प्रयत्नम् ॥ ११० ॥

अभावबस्तुन्यथ याचिते तु
  नेति ब्रुवाणो न भवेद्विनिन्द्यः ।
आज्ञानुसारागतमीक्ष्य नेति
  वदन् कृतघ्नादपि पापवान् स्यात् ॥ १११ ॥

नीचाश्च सन्तः सततं स्वभाव-
  गुणेन पूर्णा न ततो च्यवन्ते ।
गुडो न कस्यापि भवेत् कषायः
  स्वाद्यो न निम्बः सुरभक्षितोऽपि ॥ ११२ ॥

वित्तागमे व्योमगतोडुबृन्द-
  समास्त्वनेके भुवि बान्धवाः स्युः ।
तमेव खिन्नं प्रसमीक्ष्य, 'बन्धु-
  रसावि'ति प्रोक्तुमिहास्ति को वा ? ॥ ११३ ॥

प्राप्नोति योऽर्थं पुरुषार्थमध्ये
  स्याल्लब्धमेतेन ततो द्वयं तत् ।
प्राप्नोत्ययोगोलभवाग्नितापं
  यो मध्यमार्थं न लभेत लोके ॥ ११४ ॥

निर्विघ्नवित्ताढ्यवचः प्रशस्तं
यथाऽतिमूल्यः कुलधेनुवत्सः ।
दरिद्रवाक्यं न भवेत् प्रशस्त-
मल्पार्द्रभूम्यां तु यथा कृषिः स्यात् ॥ ११५ ॥

सच्छास्त्रपाठाद्विनयोऽस्य न स्यात्
स्वभावतो यो विनयेन हीनः ।
पक्वापि दध्ना सह हिङ्गुना च
कषायहीना न भवेदलाबूः ॥ ११६ ॥

यस्त्वां वृथा निन्दति, तस्य निन्दा
कार्या त्वया नैव, दया प्रदर्श्या ।
सुखं च दुःखं विधिवद्भवेतां,
कदम्बगन्धान्वितकूलपाल! ॥ ११७ ॥

अनेकवर्णा भुवि धेनवः स्युः
एको हि वर्णः सकलेऽपि दुग्धे ।
धर्मस्य तत्त्वं हि सदैकरूपं
धर्मस्य मार्गा बहवस्तथैव ॥ ११८ ॥

अलब्धनिन्दो भुवि कोऽपि नास्ति
तन्त्रैर्विना जीवति नात्र कोऽपि ;

को वात्र जीवत्यनवाप्तदुःखो
न कोऽपि चान्तं धनवान् विभाति ॥ ११९ ॥

स्वकर्मणोन्यन्न हि याति किञ्चित्
प्राणेन साकं मरणान्तकाले ।
प्राणं तु काले नयति, स्वदेहः
प्रेम्णाभिवृद्धश्च न याति साकम् ॥ १२० ॥

अधिकारः–13 ] [ दुष्कर्मः

सन्न्यासमार्गं तु विहाय खिन्न-
संसारिणां स्याद् भुवने स्मशानम् ।

भवेत् स्मशानं मृगपक्षिणां

ये पक्षिवृन्दान् चरतो वनेषु
नयन्ति नीडं, परजन्मनीः ।
ते सेवकाः शृङ्खलयाढ्यपादाः
कुर्युर्हि केदारतलेषु सेवाम् ॥ १२२ ॥

छित्वा तु कर्कटपदं विमोहात्
भोक्ता पुरा दुष्कृतिहेतुनैव :

नष्टाङ्गुलीकः पदमात्रशेषः
कुष्ठाधिना क्लिश्यति जन्मनीह ॥ १२३ ॥

निर्दुष्टसन्तो भुवि घातकानां
संगेन कुर्वन्ति कठोरकर्म ।
यथाग्निसंगाद् बलदं घृतं च
भूत्वा सुतप्तं तपतीह देहम् ॥ १२४ ॥

क्रमेण नित्यं भुवि बालचन्द्र-
समं विवर्धेत सतां तु मैत्रम् ।
दिनं क्रमान्नश्यति नीचमैत्री
स्वयं यथा नश्यति पूर्णचन्द्रः ॥ १२५ ॥

अयं गुणी चेति विभाव्य मैत्रीं
कृत्वाऽत्र पश्येर्यदि निर्गुणत्वम् ।
सुगन्धबुध्या विवृते तु पात्रे
सर्पस्य साक्षात्कृतिवद् भवेत्तत् ॥ १२६ ॥

अन्यो हि भावः, कृतिरन्यरूपा
कृत्यैः समालोच्य मनुष्यचित्तम् ।
ज्ञातुं न शक्तो मनुजः, शृणु त्वं
रत्नप्रभापूर्णमहीधरेश! ॥ १२७ ॥

अबुद्धिपूर्वं निजलाभबुध्या
    कुवञ्चनापूर्वकृताऽतिमैत्री ।
भवेन्मनःक्षोभकरी, प्रवाह-
    विनाशिपङ्कामलदेशपाल! ॥ १२८

शत्रौ प्रयुक्तासिरवध्यशत्रोः
    करं गतश्चेद्व्यसनं प्रयोक्तुः ।
दद्यात्, तथा मूढजनेषु दानं
    लोकद्वये दुःखकरं प्रदातुः ॥ १२९

स्वल्पोऽपि धर्मः सुकृतो मनुष्यै
    जीवस्य सन्तारणहेतुभूतः ।
पार्श्वं स्वपत्न्यामविहाय पुत्र-
    प्रेम्णा कुतो जीवसि चित्त! मोघम् ॥ १३० ।



# नालडियार्–संस्कृतानुवादः

## अर्थकाण्डः

# நாலடியார்

## பொருட்பால்

# १. राजधर्माध्यायः

अधिकारः-14]

लसच्छिखासंस्कृतपट्टवस्त्र-
स्रक्चन्दनैर्याति नरो न शोभाम् ।
"अहं गुणाढ्य"स्त्विति भावरूप-
विद्यैव शोभां तनुते नरस्य ॥ १३१ ॥

दानाद्विनाशं न हि याति, बुद्धिं
ददाति, नित्या भुवि, कीर्तिदात्री ।
अज्ञानरोगप्रशमौषधं तु
विद्यासमं नो भुवि, सा प्रशस्ता ॥ १३२ ॥

कुदेशजातं लवणं वरं स्यात्
साराढ्यकेदारसमुत्थधान्यात् ।
निषिद्धवंशे जनितोऽप्यधीत-
विद्यस्तथा श्रेष्ठपदे निवेश्यः ॥ १३३ ॥

हर्तुं न शक्या कुपितेन राज्ञा
दानादनाश्या न तु चोरहार्या ।
विद्या भवेत्, तादृशवित्ततोऽन्यत्
सम्पाद्य पित्रा न सुताय रक्ष्यम् ॥ १३४ ॥

विद्या ह्यनन्ता पठितुस्तु कालः
सान्तोऽत्र नानाऽऽमयदुःखजातम् ।

मधीहि हंसस्तु यथैव दुग्धम् ॥ १३५ ॥

स्यात् पोतनेता कुलतोऽन्तिमस्तत्
विस्मृत्य पोतेन नदीं तरन्ति ।
अधीतशास्त्रादपि नीचवंश्यात्
ग्राह्यास्तथा शास्त्रनिबोधितार्थाः ॥ १३६

बहुश्रुतानां महतां सुसूक्ष्म-
बुध्या युतानां जितशात्रवाणाम् ।
समाजवासात्तसुखाद्वरिष्ठ-
सुखं न दद्यादमरावतीयम् ॥ १३७ ॥

इक्ष्वग्रभागात्क्रमभक्षणेन
समं रसाढ्यं महतां तु मैत्र्यम् ।
मूलेक्षुभागात्क्रमभक्षणेन
समाऽज्ञमैत्री रसभङ्गकारी ॥ १३८ ॥

बुधस्य सङ्गाल्लभते जडोऽपि
ज्ञानं, तथा शुद्धसुगन्धिपुष्पम् ।

नवं घटं प्राप्य घटान्तरस्थ-
नीरेऽपि सौगन्ध्यमिदं ददाति ॥ १३९ ॥

सन्त्येव शास्त्राणि बहूनि तेषु
वेदान्तशास्त्राध्ययनं विहाय ।
सामान्यशास्त्राध्ययनात् तु वाद-
शक्तिर्भवेत्, सिद्ध्यति नोर्ध्वलोक ॥ १४० ॥

अधिकारः–15] [सत्कुलप्र

विच्छिन्नवस्त्राः क्षुधया कृशाङ्गाः
सन्तोऽपि चोत्कृष्टकुले प्रसूताः ।
न लक्ष्यमार्गात् सततं च्यवन्ते
सिंहः क्षुधार्तो न तृणं यथाऽत्ति ॥ १४१ ॥

महत्वचारित्र्यगुणत्रिकं तु
विख्यातवंशे जनितान् विहाय ।
नान्येषु वित्ताढ्यजनेषु तिष्ठत्
मेघालयोर्ध्वंगतपर्वतेश! ॥ १४२ ॥

सद्दर्शने चोत्थितिरासनाच्च-
त्प्रत्युद्गमस्तद्गमनेऽनुयानम् ।

इमे गुणाः सत्कुलजेषु सन्ति
नैते मता मूढजनैः समानाः ॥ १४३ ॥

सत्कर्म लोके तु कृतं कुलीनै-
स्तेषां स्वभावोऽयमितीरयेयुः ।
कृतं तु दुष्कर्म जनो विनिन्देत्
कुलीनता लाभकरी न भाति ॥ १४४ ॥

अधीत्यभावाद्विनिषिद्धकार्या-
दसत्यपैशुन्यनिरर्थवाक्यात् ।
अदानतो बिभ्यति वै कुलीनाः
परे त्वभीताः किल काष्ठतुल्याः ॥ १४५ ॥

प्रशस्तमैत्र्यं मधुरं च वाक्यं
दीनेषु दानं हृदि पूतता च ।
इमे गुणाः सन्ति कुलीनमर्त्ये
मुक्तामणिभ्यां युतसिन्धुपाल! ॥ १४६

दारिद्र्यकालेऽपि कुलीनमर्त्याः
कुर्वन्ति नूनं विहितं स्वकार्यम् ।
विशीर्णभिन्ने तु गृहे स्थलैक-
भागो न वर्षाजलपातसिक्तः ॥ १४७ ॥

दारिद्र्यकालेऽपि कुलीनमर्त्याः
परोपकाराद्विरमन्ति नैव ।
सर्पेण चन्द्रः पिहितैकभागः
प्रकाशयेद्गां परभागभासा ॥ १४८ ॥

क्लेशेऽपि सत्कर्म कृतं कुलीनैः
नीचैर्धने सत्यपि न क्रियेत ।
सवीरवेषोऽपि मृगस्तु युद्धे
न वीरकार्यं कुरुते यथाऽश्वः ॥ १४९ ॥

धनेन हीना अपि सत्कुलीनाः
प्राप्ताय दीनाय सहायभूताः ।
यथा नदीयं खननेन नीरं
ददाति शुष्काऽपि निदाघकाले ॥ १५० ॥

अधिकारः 16] [महा

बाह्यं तमो हन्ति विधुः स्वभासा
ह्यान्तं तमो घ्नन्ति तथा महान्तः ।
समाविमौ, किन्तु विधुः कलङ्कं
सहेत, सन्तो न तथा सहेरन् ॥ १५१ ॥

साध्यं क्वचित् स्यात् क्वचिदप्यसाध्यं
कार्ये महत्येव विशन्ति सन्तः ।
मोघोऽपि सिंहे प्रहितस्तु बाणः
सृगालघातान्नितरां प्रशस्तः ॥ १५२ ॥

दारिद्र्यहेतोः कृशदेहवन्तः
सन्तः कुकार्याण्यविधाय धीराः ।
प्रयत्नरज्ज्वा स्वमनो निबध्य
कुर्वन्ति सत्कर्म यथास्वशक्ति ॥ १५३ ॥

दृष्ट्वैकवारं तु यदृच्छयैकं
तमाप्तमित्रं समुदीक्ष्य सन्तः ।
कुर्वन्ति मैत्रीं, असकृत्प्रयाणात्
स्यात् क्षुण्णमार्गस्तु शिलातलेऽपि । १५४ ॥

अशब्दशास्त्रार्थविदज्ञसंघे
ब्रूयाज्जडः किंचिद्, इदं महान्तः ।
दाक्षिण्यबुद्ध्या दयया च सोढ्वा
तज्जल्पनं च शृणुयुः कथञ्चित् ॥ १५५ ॥

दन्तैश्च यन्त्रैर्मुसलैस्तदाऽन्यैः
पिष्टेक्षुसारे रुचिरैकरूपा ।

विनिन्दिताश्चापि परैर्महान्तः
स्वख्यातिभङ्गं न वदन्ति वाक्यम् ॥ १५६

चौर्यं न कुर्वन्ति न वा निषिद्धं
पिबन्ति मद्यं न विशिष्टसत्त्वाः ।
परान्न निन्दन्ति कदाऽयसत्यं
ब्रूयुर्न खिन्ना व्यसनागमेऽपि ॥ १५७ ॥

यो वान्धवत्पश्यति नान्यनारीं
यो वान्यदोषे बधिरायते च ।
यो वान्यनिन्दाकथनेऽपि मूको
धर्मोपदेशस्तु वृथैव तस्य ॥ १५८ ॥

निजान्तिकं नित्यमुपागमेद्यो
यच्चाभिया निन्दति निर्गुणी तम् ।
"याचस्वयं किञ्चि"दिति स्वयं च
तं मानयेयुस्सुतरां कुलीनाः ॥ १५९ ॥

कुलीनसंगः सकलार्थदातृ-
निध्याप्तितुल्यस्तदितं विहाय ।
सम्पत्तिहेतोः सुदृढं तु केचित्
नीचानुपाश्रित्य नयन्ति कालम् ॥ १६'

महात्मनां दोषसहिष्णुतां तु
बुध्वाऽपि तेषामहितं न कार्यम् ।
कृते तु तज्जन्यमनर्थजातं
शक्तो भवेद्वारयितुं न कोऽपि ॥ १६१ ॥

सुवर्णदानेऽप्यनवाप्यमैत्र्यं
विना श्रमं तत्स्वयमागतं चेत् ।
तथाविधां लाभकरीं च मैत्रीं
ज्ञानेन शून्यास्तु कदर्थयन्ति ॥ १६२ ॥

सद्गौरवं तद्वद्गौरवं च
मान्ये महद्भिः सततं, तथाऽपि ।
निन्दां स्तुतिं वा रचितां जडेन
विज्ञातशास्त्रा न तु मानयन्ति ॥ १६३ ॥

भूगर्तमध्ये पिहितोऽपि सर्पो
दूरागतेनाशनिना बिभेति ।
सत्कोपपात्रास्तु सुरक्ष्यगुप्त-
स्थलं प्रविश्याऽपि न रक्षिताः स्युः ॥ १६४ ॥

"मां त्वं न जानासि" "न मत्समोऽस्ती"
स्यात्मस्तुतिर्नैव महत्त्वहेतुः ।
सुधार्मिकैः स्वीयगुणानुदीक्ष्य
सभाजनं तात्त्विकगौरवं स्यात् ॥ १६५ ॥

नीचस्य मैत्री क्रमशो विनश्येत् ।
छाया यथा प्रातरुदीक्ष्यमाणा ।
छायेव सायं महतां तु मैत्री
वर्धेत, शीताब्धिसुतीरपाल! ॥ १६६ ॥

राज्ञां धनं, स्त्रीगतसुन्दरत्वं
निजान्तिकस्थैरनुभूयते हि ।
शीतो विनम्रस्तरुरागतानां
स्थलं यथा यच्छति निर्विशेषम् ॥ १६७ ॥

विमर्शबुध्या रहितैश्च मैत्री
कृताऽथ नष्टा व्यसनं ददाति ।
तस्मान्न केनापि विधेहि मैत्री-
मेतद्वरं, ह्यम्बुधितीरनेतः! ॥ १६८ ॥

अधीतिवर्जो विफलस्तु कालो
महात्मसमागमवर्जकालः ।

दानं ह्यकृत्वा गमितं दिनं च
न सन्ति नूनं गुणवन्नराणाम् ॥ १६

महात्मनां स्याद्विनयो गुणाय
विद्यावतां स्याद्विनयो गुणाय ।
स्थिते धने स्वाश्रितदुःखनाश-
करा मतास्तात्त्विकवित्तवन्तः ॥ १७



बाल्ये खलानां सहवासहेतो-
रकृत्यकार्याचरणोत्थदोषः ।
धर्मज्ञसंगाद्विलयं प्रयाति
यथार्कसंगेन हिमं तृणस्थम् ॥ १७१ ॥

अवेहि धर्मं भव कालभीतः
परेरितं मा शृणु घोरवाक्यम् ।
त्वं वञ्चनां मुञ्च, कुमार्गगन्त्रा
मा याहि, वाक्यं महतां शृणु त्वम् ॥ १७२ ॥

अवार्यरोग-स्वक-विप्रयोग-
खेदा मिलित्वा प्रभवन्ति मर्त्ये ।

मोदप्रदं जन्म न चेति बोद्धुः
सतोऽन्तिकं गच्छतु मानसं मे ।। १७३ ॥

सत्कर्म कर्तुं कृतनिश्चयानां
मतां तु सङ्गो यदि जीविते स्यात् ।
विचार्यमाणे व्यसनप्रदं च
जन्माऽत्र मर्त्यो न हि वारयेत् तत् ॥ १७४ ।

वीथीस्थनीरं च नदीं प्रविश्य
स्यात्पुण्यतीर्थं किल नूतनाम्ना ।
असत्कुलीनाश्च कुलीनसद्भिः
समेत्य माहात्म्यसमन्विताः स्युः ॥ १७५ ॥

वियद्गतप्रज्वलदोषधीश-
संगाद्भवेद्वन्द्यतमः शशोऽपि ।
प्रभावहीनाश्च महीधरोर्ध्व-
महात्मसंगात् प्रथिता भवन्ति ॥ १७६ ॥

दुग्धेन मिश्रं सलिलं च दुग्ध-
स्वरूपतामेति पृथक् न दृश्येत् ।
महात्मनां शीलवतां तु संगात्
न दृश्यते हेयगुणोऽधमस्य ॥ १७७

केदारभूमिगतकाष्ठरूढ-
तृणं तु भेत्तुं न हलेन शक्यम् ।
बलेन हीनं महदाश्रितं च
हन्तुं न शक्तस्तु तथाऽरिकोपः ॥ १७८

प्रशस्तभूमिगतधान्यतुल्यं
सत्सङ्गयुक्तः किल वृद्धिमेति ।
प्रचण्डवाताहतनौकयेव
दुस्सङ्गयुक्तो मनुजो विनश्येत् ॥ १७९ ॥

विशुद्धचित्ता अपि दुष्टसङ्ग-
योगाज्जनैर्निन्द्यतमा भवन्ति ।
वह्निर्यथा छिन्नतरुं प्रविष्टो
वन्यान् दहेच्चन्दनपादपांश्च ॥ १८०



करे न वित्तं न च यौवनं मे
प्रीताः स्त्रियो मां न हि लक्षयन्ति ।
प्रेम्णाऽङ्गनाभिः सह जीवनेच्छां
त्यक्त्वा वरा सन्न्यसने प्रवृत्तिः ॥ १८१ ॥

"पूर्णाः स्म तृप्ताः किल जीविते"ति
न वेत्ति मूढो निजभाविदुःखम् ।
तज्जीवितं नित्यवदत्र भाती-
त्यालक्ष्य विद्वान्न भवेद्विषण्णः ॥ १८२ ॥

ते यौवनं नश्यति पश्यतस्ते
हेतुं विना स्युर्विविधाश्च रोगाः ।
तद्धाविलोकप्रदधर्ममत्र
कृत्वा विशङ्कं बस शेमुर्षाक! ॥ १८३ ॥

वर्षाविहीनेऽपि यथा तटाकः ।
स्वजलं यच्छति याचकेभ्यः
रिक्ताश्च सन्तः किल दानशीलाः
यच्छन्ति, तद्वन्न ददाति चाढ्यः ॥ १८४ ।

यच्छेत्पयः पूर्णनदी यथेष्टं
शुष्कापि सा यच्छति नीरमल्पम् ।
येऽत्यन्तदानादभवन् दरिद्रा
दद्युस्तु केषांचिदपीह तेऽर्थम् ॥ १८५ ॥

स्फुटं प्रदृश्येत महत्सु दोषो
यद्दग्धचिह्नं वृषभेऽतिशुक्ले :

हत्यादिदोषः सुमहांश्च नीचैः
कृतोऽप्यदृश्यो लयमेति राजन्! ॥ १८६ ॥

दोषान्वितैर्हीनगुणैः समं तु
कृताऽपि मैत्री व्यसनप्रदा स्यात् ।
अस्पृष्टदोषैः सह हास्यहेतोः
कृतो विरोधोऽपि महत्त्वहेतुः ॥ १८७ ॥

क्षान्त्या प्रवृत्तिः सह शान्तसद्भिः
शत्रौ तु कोपाद्यमवत् प्रवृत्तिः ।
मिथ्यापरैः साकमसत्यवार्ता
गुणा गुणज्ञैरिति धर्म एषः ॥ १८८ ॥

श्रुत्वाऽपि पैशुन्यवचः परेषां
क्रोधात्मकानां भुवि शुद्धचित्ताः ।
विना कलङ्कं परिपूतभावा-
स्तिष्ठन्ति दीपप्रतिभासमानाः ॥ १८९ ॥

मोक्षव्यमन्नं प्रथमं परेषां
दत्त्वा दिनं सत्पुरुषास्त्वदन्ति ।
अपोह्य तेषां भुवि वै त्रिदोषान्
तान् मुक्तदुःखान् कुरुते तदन्नम् ॥ १९० ॥

अपूर्णकूपान्तिकसस्यतुल्यः
परािश्रतो नैति परां समृद्धिम् ।
कृपाणभृन्नारिसुनेत्रवधे
प्रयत्नशीलाः कृतिनो भवन्ति ॥ १९१ ॥

बालोऽपि वृक्षो यदि वज्रसारः
स्यात् स्थाणुरेषो गजबन्धनाय ।
स्थाने स्थितो यः कुरुते प्रयत्नं
तज्जीवितं गौरवदायकं स्यात् ॥ १९२ ॥

अल्पं च कार्यं कुरु यद्धि लभ्यं
लभ्येत पश्चान्महदेव कार्यम् ।
प्रशस्तमांसं त्वनवाप्य यद्वत्
व्याघ्रस्तदा भेकमपीह भुङ्क्ते ॥ १९३ ॥

असाध्यकार्ये च विधाय यत्नात्
धैर्येण वृत्तिः पुरुषस्य धर्मः ।
अयत्नतः सिद्ध्यति चेत् तु कार्यं
नार्योऽपि माहात्म्यमवाप्नुयुर्हि ॥ १९४ ॥

श्रेष्ठं कुलं, नीचकुलं त्वितीमे
नाम्नैव भिन्न, न हि भावभेदः ।
विद्यातपोयत्नधनान्वितस्तु
भवेत् कुलीनस्त्ववरस्तदन्यः ॥ १९५

आकार्यसिद्ध्यात्मकृतप्रयत्नं
प्राज्ञा बहिर्नैव वदन्ति नूनम् ।
किन्त्वङ्गचिह्नैः परकीयभावं
जानन्ति, तेषां वशगा धरित्री ॥ १९६

वटद्रुमं श्वेतपिपीलिकाभि-
र्भुक्तं द्रुमोद्भूतजटाः समन्तात् ।
स्थूणायिताः सन्ति, तथा स्वयत्नात्
पात्येव पुत्रः पितरं विसत्त्वम् ॥ १९७ ॥

द्विपास्यविच्छेदनखैश्च पादैः
युक्तेन सिंहेन समानसत्वाः ।
दारिद्र्यहेतोरपि नाशमेत्य
कुर्वन्ति कार्यं न तु मानहीनम् ॥ १९८ ॥

सद्दृश्यता तस्य वृथैव यस्तु
स्थितं यशः पालयितुं न शक्तः ।

स्वाद्येक्षुदण्डाग्रलसत्प्रसूने
मध्वाढ्यसौगन्ध्यविहीनतेव ॥ १९९

शाकादिहीनं जलमिश्रमन्नं
यत्नार्जितं चेदमृतोपमं तत् ।
शाकादियुक्तं धनिकेन दत्तं
ते भुञ्जतेऽन्नं त्वलसास्तु येऽत्र ॥ २००

## २. स्नेहधर्माध्यायः

अधिकारः-21] [बन्धुपरिपाल

अङ्कस्थपुत्रेक्षणतोऽङ्गनानां
गर्भप्रसूतिव्यसनं विनश्येत् ।
शैथिल्यजातव्यसनं तथैव
बन्ध्वीक्षणान्नश्यति मानवानाम् ॥ २०१ ॥

निदाघतप्ताश्रयवृक्षतुल्या
रक्षन्ति साम्येन परान् स्वकान् ये ।
वृक्षः फलानीव स्वयं तु दत्वा
क्लेशेन जीवन्ति नरोत्तमास्ते ॥ २०२ ॥

प्ररूढनानासुमहच्छलाटून्
शाखा तु बोढुं न निराकरोति ।
सन्तस्तथा स्वाश्रितबन्धुवृन्द-
रक्षां निराकुर्युरिमे न राजन्! ॥ २०३ ॥

मैत्री प्रजानां पुरतोऽपि नीच-
जनैः कृता तिष्ठति न स्थिरा सा ।
नैकमैत्री गुणिभिः कृता तु
सन्मार्गयत्नेन समा स्थिरा स्यात् ॥ २०४ ॥

एतादृशोऽयं", "सुहृदेष मह्यं'
'नायं सुहृच्चे'ति मतिं विहाय ।
बान्यदुःखं विनिवारयन्ति
श्रेष्ठयं मनुष्येषु भजन्ति तेऽत्र ॥ २०५ ॥

वर्णपात्रस्थितशर्कराढ्य-
भोज्यात् सितव्याघ्रनखोपमानात् ।
न्येन दत्तात्, लवणेन हीना
श्लाघ्या यवागूः प्रियहस्तदत्ता ॥ २०६ ॥

सदुष्णं परगेहदत्त-
सूपाढ्यमन्नं किल निम्बतुल्यम् ।

शाकः परं बन्धुगृहेऽपराह्णे
दत्तश्च पीयूषसमो विभाव्यः ॥ २०७

सदा प्रयत्नात् परवस्तुवृद्धाः
क्लेशे परान् ग्राहकवत् त्यजन्ति ।
वह्निप्रविष्टाणिसमाः स्वकीयाः
लेशेऽपि वह्निं प्रविशन्ति साकम् ॥ २०८

प्राप्तं सुखं बन्धुजनैर्मिलित्वा
यथाऽनुभूयेत भुवीह मर्त्यैः ।
तथैव दुःखानुभवे न चेत्स्यात्
बन्धुत्वशब्दो विफलः सगाढय ॥ २०९ ॥

ओत्वक्षितुल्योष्णससूपमन्नं
अप्रीतगेहाप्तमवेहि निम्बम् ।
स्वबन्धुगेहार्पितनीररूपा
सोष्णा यवागूरमृतेन तुल्या ॥ २१० ॥

अधिकारः–22] [स्नेहपरा

इक्ष्वग्रतो भक्षणवद् बुधैस्तु
मैत्री कृता स्यात् रसवृद्धिकर्त्री ।

मूलक्रमाद्धक्षणवद्धि चेक्षोः
अज्ञस्य मैत्री रसविघ्नकर्त्री ॥ २११ ॥

लोके कुलीनाः स्वकुलानुरूपं
गुणात् स्वकीयादपि न च्यवन्ते ।
तदेतदेषां गुणबोधमात्र-
मेतेन नान्यस्य मनो गृहीतम् ॥ २१२ ॥

मैत्रीं त्यज त्वं गजतुल्यमर्त्यैः
श्वातुल्यमर्त्येन विधेहि मैत्रीम् ।
स्वपोषकांश्चापि गजो विहन्यात्
श्वा प्रीतिमान् स्यान्निजघातकेऽपि ॥ २१३ ॥

कायेन सामीप्यमवाप्य चित्ते
ये भिन्नभावा न हि ते मिलन्ति ।
कायेन सामीप्यमनाप्य चित्त-
सामीप्यभाजस्तु मिथो मिलन्ति ॥ २१४ ॥

शाखावहत्पुष्पसमं प्रसह्य-
मुखैः कृता धार्मिकमित्रता स्यात् ।
जलप्रसूनेन समं कदाचित्
म्लानास्यवन्तं वृणुयान्न कोऽपि ॥ २१५ ॥

स्नेहेऽधमाः पूगतरोः समानाः
स्युर्नारिकेलेन समास्तु मध्याः ।
तदुत्तमानां गुणशीलभाजां
मैत्री भवेत् तालतरोः समाना ॥ २१६ ॥

प्रेम्णार्पितं क्षालजले सुपक्व-
शाकाढ्यमन्नं स्वमृतोपमं स्यात् ।
अप्रीतहस्तार्पितषड्रसान्नं
बरस्वरावद् भविता कषायम् ॥ २१७ ॥

यो मक्षिकापादसमाल्पसाह्यं
स्निग्धो न कुर्यात् किमु तस्य मैत्र्या ॥
गत्वा स्वयं तैरर्चयन्ति मैत्रीं
कुल्येव सस्ये ह्युपकारिणो ये ॥ २१८ ॥

वरं विरोधो भुवि मूढसख्या-
दवार्यरोगान्मरणं गरीयः ।
वधो वरस्तस्य विगर्हणाच्च
मिथ्यास्तुतेर्दूषणमुत्तमं स्यात् ॥ २१९ ॥

अनेकवारं बहुभिर्मिलित्वा
ज्ञात्वा गुणैक्यं क्रियतां तु मैत्री ।
प्राणापहर्त्रा भुजगेन चापि
विधाय सख्यं न वरो वियोगः ॥ २२० ॥



आलोड्य निर्णीतसुहृत्सु दोषः
स्याच्चेदनुक्त्वा हृदि गोपनीयम् ।
तुषस्तु धान्ये सलिले च फेनः
पुष्पे दलं सन्ति हि तेषु दोषाः ॥ २२१ ॥

विभिन्नकूलं क्षमयाऽसकृच्च
बध्वा यथा पान्ति कृषीवलास्तु ।
अनिष्टकार्ये बहुधा कृतेऽपि
शान्त्या सहन्ते सुहृदस्तथा तान् ॥ २२२ ॥

तरुप्रसूनभ्रमराढ्यदीर्घ-

सुहृत्कृताः सह्यतमास्तु दोषाः
तस्मात् तयोर्वर्धत एव मैः

पयोधिमुक्ताभरपोतदत्त-
मुक्ताकुलाम्भोनिधितीरपाल! ।
योऽवार्यमैत्रीसहिते च दोषः
स चित्तसन्तापकरोऽग्नितुल्यः । २२४ ॥

अत्याज्यमित्राण्यपकारकर्तॄ-
नप्यादरात्पश्य यथा सुवर्णम् ।
अर्थेन साकं गृहदाहकोऽग्निः
प्रेम्णा दिनं सद्मनि रक्ष्यते हि ॥ २२५ ॥

अत्याज्यमित्रस्य महापकर्तु-
रपीह दोषाय भवेन्निरासः ।
हस्तं क हिंस्यात् नयनापकर्तृ,
स्वर्गस्पृशद्वंशयुताद्रिनाथ! ॥ २२६ ॥

विधाय मैत्रीमथ मित्रभूते
दोषं न पश्यन्ति गुणेन पूर्णाः ।
पश्यन्ति ये दोषमिमे तु नीचा
भवन्ति पूर्णाम्बुधितीरपाल! ॥ २२७ ॥

महापकारं रचितं परेण
विचिन्त्य दैवं यदि वै सहेरन् ।

सुहृत्कृतानर्थसहिष्णुताऽपि
श्लाघ्या, चलन्निर्झरदेशपाल ! ॥ २२८ ॥

स्वकीयबुध्या सुगृहीतमित्रे
ज्ञायेत पश्चाद्यदि निर्गुणत्वम् ।
अथापि तं स्वीयमवेहि नित्यं
परत्वबुद्धिं हृदि गोपय त्वम् · २२९

विधाय सख्यं गुणदोषचर्चां
तस्मिन्नरेऽहं यदि ह्यत्र कुर्याम् ।
तत्तुल्यपापी भविता ध्रुवं तु
ब्रूयाद्बहिर्यः सुहृदो रहस्यम् ॥ २३०




वर्षाजलं पर्णगृहप्रविष्टं
हस्ताख्यपात्रैरथ सेतुबन्धैः ।
निष्कास्य केचिन्निजकार्यसिद्ध्यै
सन्त्यत्र, नीरालयदेशनाथ ! ॥ २३१ ॥

स्नेहः सतां श्रेष्ठतमः प्रशस्तः
फलेन पूर्णश्च यथैव वृष्टिः ।

स्यान्निष्फला हीनगुणेषु मैत्री
निर्वृष्टितुल्या भुवि, पाण्ड्यराज ! २३२ ॥

सूक्ष्मज्ञसङ्गोद्भवसौख्यभोगः
स्वर्लोकभोगेन समो वरिष्ठः ।
अशास्त्रविद्भिर्विफलैर्मनुष्यैः
समागमः स्यान्निरयेन तुल्यः ॥ २३३ ॥

वात्सल्यशून्यैः सह लब्धमैत्री
पूर्वं प्रवृद्धेव भवेत्, ततस्तु ।
तृणं यथाग्नौ झटिति प्रणश्येत्
हे चन्दनाद्र्यालयदेशपाल! ॥ २३४ ॥

असाध्यकर्मण्यपि साध्यतोक्तिः
साध्येषु कार्येषु वृथा विलम्बः ।
इदं द्वयं भोगविरक्तिभाजां
सन्न्यासिनां चापि विषादकृत् स्य

भूत्वैकतोये सहरूढमूलं
न कैरवं चोत्पलसाम्यमेति ।
तथा गुणाढ्यैः सहवासभाजो
नीचस्य कृत्यं पृथगेव भायात् ॥ २३६ ॥

कपिस्त्रियः पूर्वगतातिवृद्ध-
कपेस्तु हस्तात् फलमादधानाः ।
यद्भूधरे यान्ति च तस्य नाथ!
विभिन्नबुद्धेः सुखदा न मैत्री ॥ २३७ ॥

क्लिष्टस्थितौ मित्रवरस्य साह्यं
प्राणं च दत्त्वा यदि नास्य कुर्याम् ।
तत्तुल्यपापी भविता सतीत्व-
भङ्गे न रक्षेत् सुहृदः सतीं यः ॥ २३८ ॥

निष्कासनं धेनुघृतस्य पात्रात्
तत्पूरणं चाप्यथ निम्बतैलैः ।
नीतिज्ञमैत्रीं तु विहाय मूढ-
मैत्रीसमं स्यात् मधुभृन्नगेश! ॥ २३९ ॥

गुणेन पूर्णो यदि नो दयावान्
तत्पेयदुग्धे जलवद् वृथैव ।
ज्ञानी त्वसन्मित्रयुतो यदि स्यात्
नश्येद्यथा सर्पयुतो हि नागः ॥ २४० ॥

# ३. सुखधर्माध्याय:

अधिकार:–25] [ज्ञानविशिष्टता]

शत्रुं बुधाः क्षीणदशामवाप्तं
न यान्ति हन्तुं दययार्द्रचित्ताः ।
सर्पो बलाढ्यो न हि बालचन्द्र-
मपूर्णरूपं ग्रसतीह यद्वत् ॥ २४१

विभूषणं निर्धनिनां क्षमा स्यात्
महाब्धिशैत्यान्वितकूलपाल !
क्षमां विना संचरतः कुमार्गे
कुलं विनिन्दन्ति जनाः समेऽपि ॥ २४२ ॥

स्थले न किञ्चिद्धि, वरस्वराया
बीजेन भूयान्न तु नारिकेलम् ।
तदौत्तरेया इव दाक्षिणात्या
मुक्तिं भजन्ते, दिशि को विशेषः ॥ २४३

स्वभावशुद्धा गुणहीनसङ्गात्
न बुद्धिभेदं समवाप्नुवन्ति ।
यम्निम्बमध्ये फलितापि यद्वत्
माधुर्यभावं कदली न मुञ्चेत् ॥ २४४ ॥

अब्ध्यन्तिके चापि जलं सुपेयं
नगान्तिके तल्लवणान्वितं स्यात् ।
कुलानुरूपं न नृणां गुणः स्यात्
मनोऽनुरूपं गुणमाप्नुवन्ति ॥ २४५ ॥

संयुज्य पूर्वं गुणशालिमर्त्यैः
त्यक्तुं न वाञ्छन्ति दृढप्रतिज्ञाः ।
सुहृद्वियोगात्सफलो ह्ययोगः
कदम्बयुक्ताम्बुधिकूलपाल ! ॥ २४६॥

विचारमूलाप्तविवेकवद्भिः
सङ्गस्त्वनन्तानि सुखानि यच्छेत् ।
विवेकशून्यैः सह विप्रयुक्ता
दुःखैर्वियोगं सुतरां भजन्ते ॥ २४७ ॥

स्वोच्चस्थितिप्राप्तिविधौ तथैव
नीचस्थितिप्राप्तिविधौ च तद्वत् ।
उपर्युपर्यूर्ध्वपदस्य लाभे
सर्वोच्चतायां स्वकृतिर्हि हेतुः ॥ २४८ ॥

मूढस्य पार्श्वे निजकार्यहेतोः
यानं सतां स्याद्धि विवेककृत्यम् ।

तत्रैव भूयादविवेककृत्यं
क्वणत्तरङ्गाम्बुधितीरपाल! ॥ २४९ ॥

धर्मार्थसम्पादककार्यपूर्तिः
तेनेह भोगस्त्वथ दानकर्म ।
लोके त्रयं सिद्ध्यति यस्य तद्धि
निवृत्तनौकासममेव भाव्यम् ॥ २५० ॥

अधिकार: 26 ] [ विवेकशून्यता

विवेकवत्वं किल पूर्णभाग्यं
दारिद्र्यवत्वं त्वविवेकिता स्यात् ।
नपुंसकस्त्री बहुभूषणानि
धृत्वापि लावण्यमवाप्नुयात् किम् ? ॥ २५१ ॥

बहुश्रुता ज्ञानिवरा महत्वं
विहाय दारिद्र्यवशा भवन्ति ।
विद्वत्सु वाणी वसतीति कोपात्
लक्ष्मीर्न तानेति, रहस्यमेतत् ॥ २५२ ॥

'पठे'ति बाल्ये पितुरुक्तवाक्यं
सुतस्त्वशृण्वन्नवलीलयाऽत्र ।

अन्ते सभायामपठन् स लेखं
तान् ताडयेद्वै कुपितः स्वदण्डैः ॥ २५३ ॥

विद्वत्सभायां प्रविशन्न विद्वान्
न भाषते चेत् शुनकायतेऽसौ ।
प्रविश्य किञ्चिद्यदि भाषतेऽसौ
शुनां तु तत्स्याद्भषणेन तुल्यम् ॥ २५४ ॥

अल्पज्ञसंघं प्रविशन् सधैर्यं
अज्ञाततत्त्वः प्रवदेदविद्वान् ।
पृष्टाः परैर्ज्ञातमपीह सन्तः
श्रोता त्वनर्हो यदि नो वदेयुः । २५५ ॥

अधीततत्त्वा विबुधा यथेष्टं
स्खालित्यभीत्या न वदेयुरर्थान् ।
नैवं परे, तालतरुस्थशुष्क-
पत्रं निनादं कुरुते, न चार्द्रम् ॥ २५६ ॥

धर्मोपदेशस्त्वविवेकिजन्तोः
पोत्र्या यथा चाम्ररसप्रदानम् ।
दारुः शिलायां न विशेत्सुबद्धः
तेषां च कर्णे प्रविशेन्न धर्मः ॥ २५७ ॥

प्रक्षाल्य दुग्धेन सुशोषितं त-
दङ्गारनैल्यं न ततोऽपयाति ।
ज्ञानं न विन्देत् बहुताडितोऽपि
स्वपूर्वपुण्यं यदि तस्य न स्यात् ॥ २५८ ॥

विहाय पुष्पं मधुगन्धपूर्णं
वाञ्छन्ति हेयं किल मक्षिकास्तु ।
हेयार्थलाभोद्यतचित्तवन्तः
शृण्वन्ति नैवं मधुरां बुधोक्तिम् ॥ २५९ ॥

बुधेरितं शास्त्रवरार्थतत्त्वं
यस्मान्न केचिद्बहुमानयन्ति ।
तस्मात्तु मूढाः समुदीक्ष्य मूढान्
नीचप्रसङ्गं खलु कुर्वतेऽत्र ॥ २६० ॥

अधिकारः 27] [निरर्थकभाव

स्थितं समीपेऽप्यथ लोभिवित्त-
मलभ्यबुद्ध्या न बुधाः स्मरन्ति ।
सुपक्वनानाफलसन्निधाने
यथा न वाञ्छेज्जतुका कपित्थम् ॥ २६१

'कळ्ळि'प्रसूनं शिरसा न धार्यं
हस्तापचेयामपि कळ्ळिवल्लीम् ।
स्प्रष्टुं न वाञ्छन्ति, धनाढ्यनीच-
सङ्गं न कुर्वन्ति बुधास्तथैव ॥ २६२ ।

सवीचिसिन्धोस्तटगाश्च दूरं
प्रयान्ति कूपं मधुनीरयुक्तम् ।
नीचस्य वित्ते निकटागतेऽपि
दूरं तथा यान्ति सतां धनार्थम् ॥ २६३

ये ज्ञानिवर्या भुवि ते दरिद्रा
ये ज्ञानशून्या बहुभाग्यवन्तः ।
दुकूलपट्टादिधराश्च ते स्युः
नूनं भवेत्कारणमत्र पुण्यम् ॥ २६४ ॥

गुणाढ्यविद्वान्न भवेद्धनाढ्यो
धनाढ्यवान् स्याद् गुणहीनमूढः ।
न पूर्वपुण्यादपरं निदान-
मस्त्यत्र कार्ये किल शूलनेत्रि! ॥ २६५ ।

पद्मासने! स्वर्णमये! कुतस्त्वं
गुणेन युक्तान् मनुजान् विहाय ।

गुणैर्विहीनान् भजसे मनुष्यान्
हे लक्ष्मि! भस्मीभव तेन हेतोः ॥ २६६ ॥

परोपकारिष्वपि निर्धनत्वं
परापकारिष्वखिलार्थसत्त्वम् ।
एतद् द्वयं तेषु वृथा विलज्जं
तिष्ठत्यहो! शूलसमाक्षि! पश्य ॥ २६७ ॥

सन्तः सलज्जा विधनाः स्वपादैः
गत्वैव भैक्ष्यान्नमदन्ति लब्ध्वा ।
निर्लज्जमूढाः सधनास्तु दुग्ध-
शाकायुतान्नं स्वगृहे ह्यदन्ति ॥ २६८ ॥

धान्याढ्यसस्यं तु विहाय दग्धं
वर्षन्ति मेघा जलधौ यथैव ।
मूर्खास्तथा भूरिधनागमे तु
यच्छन्त्यपात्रे मनुजे तथैव ॥ २६९ ॥

विवेकशून्यस्य वृथा ह्यधीतिः
विवेकिनोऽप्यध्ययनं वृथैव ।
अयाचनं स्यात्किल भाग्यपूर्तिः
आढ्यो ह्यदाता भविता दरिद्रः ॥ २७० ॥

# ४. दुःखधर्माध्यायः



पक्त्वा समेषां स्थितमल्पमन्नं
प्रदाय भुक्तिर्भुवि भोजनं स्यात् ।
एकान्तभोक्तुः पिहितस्वगेहे
स्वर्गप्रवेशः किल वारितः स्यात् ॥ २७१ ॥

ये सर्वथा शक्त्यनुरूपमल्प–
धर्मं तु कुर्युर्महिमान्वितास्ते ।
"लभ्येत चेद्वित्तमथ प्रदद्या"
मितीरयन्तो जननिन्दिताः स्युः ॥ २७२ ॥

स्वेनाप्यभुक्तं यतये न दत्तं
निक्षिप्य वित्तं भुवि ये म्रियन्ते ।
तान् लोभिनो वीक्ष्य तदेव वित्तं
हसेद्, दयारूपगुणोऽपि तद्वत् ॥ २७३ ॥

दानं त्वकृत्वा स्वयमप्यभुक्त्वा
सम्पादितं लोभिजनस्य भाग्यम् ।
भुज्येत केनापि परेण लोके
कुलोद्भवा सुन्दरकन्यकेव ॥ २७४ ॥

स्थितेऽपि नीराढ्यमहापयोधा-
वीषत्स्रवत्कूपजलं पिबन्ति ।
अज्ञातपुण्यार्जितभूरिवित्तात्
वरा सतां नित्यदरिद्रतापि ॥ २७५ ॥

उक्त्वा "ममेदं"त्विति लोभिना यत्
सुरक्षितं वित्त, महं दरिद्रः
'ब्रूयां ममे'त्येष ददाति नोऽर्थं
अहं तु दद्यां, अत एव वच्मि ॥ २७६ ॥

आढ्याददातुस्त्वधनः सुखी स्यात्
न चास्य दुःखं धननाशमूलम् ।
धनस्य रक्षा भुवि तन्निखात-
मिथ्याव्ययादिव्यसनानि नास्य ॥ २७७ ॥

आढ्यो न दद्यात् स्वयमाप्य तस्मात्
ज्ञातिश्च वित्तं न हि दातुमिच्छेत् ।
न वारयेज्ज्ञातिरमुं तु दानात्
ज्ञातिं धनी दानपरं न रुन्ध्यात् ॥ २७८ ॥

गोरूपदात्रा मुदितेन चार्थि-
वत्साय दानं भुवि लक्ष्यदानम् ।

बलाद्गवां दोहनवत्प्रयत्न-
पूर्वप्रदानं भुवि निन्दितं स्यात् ॥ २७९ ॥

धनार्जने दुःखमवाप्तवित्त-
संरक्षणे दुःखमथास्य नाशे ।
दुःखं भवेद्रक्षणकर्मलोपे
सर्वात्मना दुःखमयं धनं स्यात् ॥ २८० ॥

प्रकारः–29 ] [ सर्ववस्तुशून्यता

काषायवस्त्रा यतिनोऽल्पवस्तु-
सद्भावमात्रात्प्रथिता भवन्ति ।
वरिष्ठवंशे जनिताश्च वित्त-
नाशे शवादप्यधमा भवन्ति ॥ २८१ ॥

घृतं जलादप्यतिसूक्ष्मवस्तु
धूमो घृतादप्यतिसूक्ष्मरूपः ।
सुसूक्ष्मधूमैरपि चाप्रवेश्य-
रन्ध्रं दरिद्राः प्रविशन्ति शीघ्रम् ॥ २८२ ॥

शिलोच्चशैलस्थविकासहीन-
'कान्तळ्' प्रसूनं भ्रमरा न यान्ति ।

स्वीयास्तथा यान्ति न रिक्तबन्धुं
शुकाकुलारण्यसुदेशपाल! ॥ २८३ ॥

धनार्थमाढ्यं बहवो विनीताः
प्रयान्ति काकास्तु शवं यथैव ।
अवाप्य दारिद्र्यमटन्तमेनं
"किं त्वं सुखी वे" ति न कोऽपि पृच्छेत् ॥ २८४

कुलीनता नश्यति वीरतापि
विद्यापि नश्येद्धनहीनपुंसाम् ।
अधः पतत्प्रस्रवणात्तपूत-
नानानगालंकृतदेशपाल! ॥ २८५ ॥

क्षुद्बाधया स्वान्तिकमागतानां
ग्रामे वसन्तोऽप्युपकारमल्पम् ।
कुर्वन्ति ये नैव, विहाय गेहं
तेऽन्यत्र जीवन्तु विधाय भैक्ष्यम् ॥ २८६ ॥

दारिद्र्यदुःखाकुलमानवानां
गुणेन साकं निशिता च बुद्धिः ।
नश्यन्त्यनन्तानि यशांसि लोके
सुजातिपुष्पोपमदन्तयुक्ते! ॥ २८७ ॥

रिक्तस्य याच्ञार्थमुपागतस्य
साह्यं ह्यकृत्वा निजरक्षणार्थम् ।
स्वग्रामवासाद्बहुदूरमेत्य
गेहेषु भैक्ष्याटनमुत्तमं स्यात् ॥ २८८ ॥

छित्वा तु शाकं वलायाढ्यहस्तैः
पत्त्वा सुपात्रे लवणं विनैव ।
कराख्यपात्रे प्रणिधाय भुक्त्वा
जीवन्त्यतुष्टाः सति वित्तनाशे ॥ २८९ ॥

सबिन्दुकाया भ्रमरा मनोज्ञाः
विपुष्पशाखां न यथा भजन्ते ।
रिक्तं तथा बन्धुजना न यान्ति
जलाढ्यशैलान्वितदेशपाल! ॥ २९० ॥

ाधिकारः–30] [मानः

धनाभिमानाद् गुणहीनमर्त्य-
कृतान्यकृत्यानि समीक्ष्य लोके ।
दग्धाटवीवह्निसमानमेषां
चित्तं व्यथेन्मानवतां नराणाम् ॥ २९१ ॥

कृशोऽपि मानी गमितास्थिशेषो
ब्रूयान्न खेदं गुणवर्जितेभ्यः ।
बुध्वा व्यथां पूर्वमथोपकर्तृ-
बुधाय खेदं स्वयमीरयेच्च ॥ २९२ ॥

वयं दरिद्रास्त्वतिथीन् स्वगेहे
प्रवेशयामः, प्रभवः किलास्मान् ।
निक्षिप्य गेहाद्बहिरेव नोऽन्नं
यच्छन्ति, मैत्रीं त्यज वित्तवद्भिः ॥ २९३ ॥

तन्मानिनां गौरवमत्र लोके
वर्धेत, सन्मार्गपथानुवृत्त्या ।
तत्पुण्यहेतोः परलोकलाभः
कस्तूरिकामोदसुकुन्तलाढ्ये! ॥ २९४ ॥

पापापवादप्रदकार्यजातं
सन्तो न कुर्युर्मरणान्तिकेऽपि ।
स्यान्मृत्युना ह्येकदिने क्षणैक-
दुःखं तु, दुष्कृत्यभवं स्थिरं स्यात् ॥ २९५ ॥

सत्वेऽपि वित्ते भुवि ये न दानं
कुर्वन्ति ते स्युर्नितरां दरिद्राः ।

दारिद्र्यकाले धनिकानुपेत्य
ये नार्थयन्ते धनिका मतास्ते ॥ २९६ ॥

बुभुक्षया बिभ्यति चाधमास्तु
तन्मध्यमा बिभ्यति दुःखहेतोः ।
निन्दाकृते बिभ्यति चोत्तमास्तु
चापायतभ्रूमति! शूलनेत्रि! ॥ २९७ ॥

"अयं दयावानधनो गुणी"ति
निर्दिश्य निर्लक्ष्यधिया धनाढ्यैः ।
उक्ते तु चित्तं महतां दहेद्धि
यथात्वयोगोलभवाग्नितुल्यम् ॥ २९८

अर्थिष्वदानं न भवेद्धि लज्जा
भीतिश्च मेतव्यकृतौ न लज्जा ।
क्लेशे च वित्ताढ्यकृतोपकार-
प्रचारकार्याद्विरतिर्हि लज्जा ॥ २९९ ॥

स्वर्लोकभोगानुभवं च सन्तो
नेच्छन्ति मानेन विना यदाप्तम् ।
स्ववामभागे पतितं च हत्वा
व्याघ्रो न भुञ्जीत यथैव जन्तुम् ॥ ३००

"मयैव रिक्तोऽयमभूद्धनाढ्यो
नायं स्वयत्नाद्धनवान् बभूव" ।
उक्त्वेत्थमात्मस्तुतिलम्पटानां
पश्चाद् बुधा यान्ति न वित्तहेतोः ॥ ३०१ ॥

विनिन्द्यकार्यादुदरस्य पूर्तेः
निन्द्यं त्वकृत्वा मरणं गरीयः ।
मृतो जनित्वा पुनरेव देहं
प्राप्नोत्यहो नेत्रनिमेषकाले ॥ ३०२ ॥

दारिद्र्यहेतोर्मनुजस्य नीच-
भैक्ष्ये प्रवृत्तिः सहजा, तथापि ।
"आलिंग्य गेहं प्रविशन्तु भोक्तुं"
इत्युक्तवत्सद्म बुधा विशेयुः ॥ ३०३ ॥

त्यक्तोऽपि दैवेन विनष्टभाग्यः
क्रोधान्निजश्रैष्ठ्यमनुस्मरन् सः ।
धनार्जनव्यग्रजडानुपेत्य
नम्रोत्तमाङ्गेन महान्न तिष्ठेत् ॥ ३०४ ॥

प्रेम्णा प्रदातुर्महतोऽन्तिकेऽपि
याच्ञां विना जीवनमुत्तमं स्यात् ।
स्मृतैव यच्ञा हृदयं दहेच्चेत्
याच्ञाकृतां चित्तगतिः कथं स्यात्? ॥ ३०५ ॥

''आयान्तु दुःखानि सुखानि यान्तु''
चेत्यात्मिका चित्तगतिर्यदा स्यात् ।
दैन्यं स्वयं नश्यति तेन, कस्मात्
भैक्ष्ये प्रवृत्तिः परगेहमेत्य ॥ ३०६ ॥

भवन्त्यजस्रं भुवि नूत्नमर्त्याः
किन्त्वर्थिनिन्दारहितो मनुष्यः ।
जनिं विना मुक्तिमुपैति, शैल-
स्वर्णानयन्निर्झरदेशपाल! ॥ ३०७ ॥

दीनः प्रभाहीनशरीरयुक्तो
विनष्टबुद्धिः समवाप्य मोहम् ।
"देही"ति पृष्ट्वाऽथ निराकृतश्चेत्
तत्रैव मृत्युं किमु नाप्नुयात् सः ॥ ३०८ ॥

धनाढ्यमालम्ब्य विनीतवृत्त्या
दीनस्य वृत्तिः सहजा, तथापि ।

निर्लज्जमस्मिन् मम देहि किञ्चित्
इत्युक्तितः सौख्यकरी च याच्ञा ॥ ३०९ ॥

सुज्ञातपूर्वाय सुहृद्वराय
प्राप्ताय साह्यं ध्रुवमेव कार्यम् ।
स्वयं न कुर्याद्यदिहागताय
तच्चित्तसन्तापकवह्निवत् स्यात् ॥ ३१० ॥

## ५. सामान्यधर्माध्यायः

अधिकारः –32] [सभातत्त्वपरिज्ञानम्

विद्वत्सभायामगृहीतसाराः
विवेकशून्यानि वचांस्युदीर्य ।
तत्साधनव्यग्रजडान्तिके ते
ब्रूयुर्न सन्तो ह्युपदेशवाक्यम् ॥ ३११ ॥

यत्किञ्चिदुक्त्वा विबुधेन तुल्यं
नटन्तमज्ञं न बुधा मिलन्ति ।
यतस्तु विद्वत्कुलदूषणे वा
कराभिघातं युधि वा विशेत्सः ॥ ३१२ ॥

परस्य वैदुष्यविवादशक्तिं
स्वज्ञातमर्थं वदितु परेषु ।
पराजये कारणमप्यबुध्वा
वाञ्छन्ति वक्तुं बहवो बहूनि ॥ ३१३ ॥

आकर्ण्य विद्यार्थिभिरुक्तपाठ-
मप्राप्य विद्यां गुरुतः क्रमेण ।
ज्ञात्वैकसूत्रं सदसीदमुक्त्वा
मौढ्यं विलज्जो विवृणोति मूढः ॥ ३१४ ॥

जयैकलक्ष्यास्त्वगृहीततत्त्वाः
कोपेन ये सन्ति सभां प्रविश्य ।
स्ववाग्मितां तेषु च दर्शयन्तः
स्युर्भग्नदन्ता विबुधा हतास्तैः ॥ ३१५ ॥

उच्चार्य मूलंपरमर्थतत्त्व-
मप्राप्य मूढः प्रवदेत् कुवाक्यम् ।
तेषां तु मातर्यनुतापबुध्या
विख्यातसन्तस्तदिदं सहन्ते ॥ ३१६ ॥

पण्याङ्गनानां भुजवत्तु शास्त्रं
भवेत्सुलभ्यं पठनोद्यतानाम् ।

शास्त्रान्तरार्था रमणीयवेश्या-
मनोवदज्ञेयतमाः समेषाम् ॥ ३१७ ॥

ग्रन्थांस्तु संचित्य विनार्थबोधं
ये स्वीयगेहं किल पूरयन्ति ।
न ते बुधाः स्युः, सुगृहीतभावाः
ये बोधयन्त्यन्यमिमे बुधाः स्युः ॥ ३१८ ॥

व्याख्याचतुष्कैः सुविचार्यभाव-
प्रकाशहीनानि पदानि तानि ।
व्याख्यानवर्याणि न वै भवन्ति
गोपूर्णशैलान्वितदेशपाल! ॥ ३१९ ॥

अधीतशास्त्रा अपि दुष्कुलीना
दोषान् परोक्तेषु न वै सहन्ते ।
बुधाः कुलीनास्त्वनधीतशास्त्रैः
प्रयुक्तदोषान् क्षमया सहन्ते ॥ ३२० ॥

# ६. शास्त्रधर्माध्यायः

अधिकारः-33] [अल्पज्ञानवत्त्वम्

प्रेम्णा दयार्द्रैः कथितं सुवाक्यं
गृह्णाति विद्वान् बहुलाभकारि ।
तद्वाक्यसारं न हि वेत्ति मन्दो
दर्वी न वेत्त्यन्नरुचिं यथैव ॥ ३२१ ॥

निर्दुष्टमर्त्यैरितधर्मबोधं
श्रोतुं न वाञ्छेद् गुणहीनमूढः ।
श्वा चर्मभोक्ता श्वपचैः सुपुष्टः
क्षीरान्नसारं न यथाऽवगच्छेत् ॥ ३२२

प्राणान्निमेषैकविनाश्यरूपान्
कात्स्न्र्येन बुध्वाऽप्यथ धर्ममल्पम्
निर्लज्जमूढो यदि नात्र कुर्यात्
सत्ता च मृत्युश्च समे हि तेषाम् ॥ ३२३ ॥

स्याज्जीवितं स्वल्पमवार्यमेतत्
तत्राऽपि निन्दा बहवोऽत्र, तस्मात् ।

सर्वैः सहर्षं त्वविधाय मैत्री-
मन्यैरमैत्र्या क इहास्ति लाभः ॥ ३२४ ॥

मन्देन विद्वत्सदसीह कश्चित्
विनिन्दितो मौनमवाप्नुयात् चेत् ।
तन्निन्दको नश्यति, वैपरीत्ये
भवेदिदं विस्मयदायकं हि ॥ ३२५ ॥

वार्धक्यदुःखागमनात्तु पूर्वं
सद्धर्मकार्येष्वकृतप्रयत्नः ।
अन्ते, 'गृहाद्गच्छ बहिर्वसे' ति
दास्या कठोरं स तिरस्कृतः स्यात् ॥ ३२६

स्वयं त्वभुक्त्वा महतामदत्त्वा
धर्मानसम्पाद्य सदा विमुग्धाः ।
मग्नाः सदा वित्तसमूह एव
मन्दा निजायूंषि कदर्थयन्ति ॥ ३२७ ॥

बाल्ये वयस्यात्मविमुक्तिहेतोः
ये धर्मपाथेयमनाप्य मूढाः ।
पश्येम पश्चादिति भावयन्ति
तेऽन्ते स्वलक्ष्यं गदितुं न शक्ताः ३२८ ॥

जडस्य धर्मे तु मतिस्तदा स्यात्
यदा बुभुक्षाऽऽमयबाधितः स्यात् ।
ताभ्यां विमुक्तः स यदा तदा तु
न चिन्तयेत् सर्षपमात्रधर्मम् ॥ ३२९ ॥

स्वप्राणतुल्यान् निजबन्धुवर्गान्
यमोऽपनेतुं यतते, तदेतत् ।
दृष्ट्वापि कायेन सुधर्मकार्य-
मप्राप्य चायुर्विफलं नयन्ति ॥ ३३० ॥



सज्जे यमे प्राणमितोऽपनेतुं
तुष्यन्त्यमी जीवितजाललग्नाः ।
पक्तुं निहन्त्रा जलपूर्णपात्र-
प्रक्षिप्तकूर्मो विहरेद्यथाऽत्र ॥ ३३१ ॥

कृत्वा कुटुम्बोचितकार्यजालं
धर्मस्ततश्चिन्त्य इतीरयेद्यः ।
शान्ते रवे मज्जनमत्र सिन्धौ
कुर्यामि चेत्याशयवान् भवेत्सः ॥ ३३२

विद्यातपोभाग्यकुलोद्भवत्व-
वृद्धत्वसंख्याकगुणाढ्यमर्त्ये ।
विशिष्टभाव्युत्तमलोकचिन्ता
न चेद्द्विसर्प्यन्नसमं वृथैतत् ॥ ३३३ ॥

शिला न वेत्त्यन्यवचस्तथापि
स्थातुं च गन्तुं शयितुं तथैव ।
यत्साद्यकृत्सा निकटागताना-
मतो वरा नीचनरादपीयम् ॥ ३३४ ॥

निरर्थकं साधुजनेषु कोपात्
ब्रूयुस्तु दुःखप्रदनिन्द्यवाक्यम् ।
व्याख्यां च कुर्युर्भुवि बुद्धिहीना
नो चेन्न शान्ति भजतेऽस्य जिह्वा ॥ ३३५ ॥

स्वस्मिन् विरक्तान् मनुजान् प्रयत्नात्
कुर्याम रक्तानिति यो यतेत ।
करक्षतैः शैलमसौ हि भेत्तुं
वाञ्छेत् कदम्बाढ्यपयोधितीर! ॥ ३३६ ॥

घृताढ्यपात्रं परितो भ्रमन्ति
विनाऽऽज्यलाभं हि पिपीलिकास्ताः ।

अदानशीलं च धनेन पूर्णं

लोकाः समन्तादनिशं भ्रमन्ति ॥ ३३७ ॥

न सत्सभां याति न धर्ममेति

दीनेषु दानं न करोति मूढः ।

नोपैति भार्यां सयशो न जीवेत्

न जीवितं द्वेष्टि तथाऽपि कस्मात् ॥ ३३८ ॥

स्तुतः स्वयं बुद्धिमता जडस्तु

निर्लक्ष्यभावं यदि दर्शयेत्सः ।

स्तोता महानब्धिपरीतपूर्ण-

भूलाभकालेऽपि न मोदमेति ॥ ३३९

विद्याकुलश्रैष्ठ्यगुणाढ्यमेक-

मन्यः प्रशंसेद्यदि तद्वरं स्यात् ।

मूढं निजस्तोत्रपरं तु नित्य-

पित्तेन तुल्यं ब्रुवते स्वकीयाः ॥ ३४०

प्रकारः–35] [नीचकृत्यम्

बुध्वाऽपि शास्त्रार्थरसं महद्भ्यः

स्वाभीष्टदुष्कर्म करोति मन्दः ।

सत्तण्डुलान् प्राप्य च कुक्कुटो न
  मुञ्चेद्यथाऽशुद्धसमीपवासम् ॥ ३४१ ॥

विशुद्धशास्त्रार्थविदां समीपं
  "गच्छेम एही 'ति सुमित्रवाक्यम् ।
धिक्कृत्य मन्दः स्वपितुं प्रयास्यन्
  उक्त्वा कुहेतुं स ततोऽपगच्छेत् ॥ ३४२ ॥

भाग्यागमेऽप्युत्तमजाः स्वकीय-
  गुणान्विताः सन्ति यथावदेव ।
वित्तागमे नीचजनप्रवृत्तिः
  नूत्ना भवेन्निर्झरदेशपाल! ॥ ३४३ ॥

परोपकारं यवतुल्यमल्पं
  जानन्ति तालेन समं महान्तः ।
तालोपमं साह्यमवाप्य नीचा
  न तत्स्मरेयुर्जलदेशपाल! ॥ ३४४ ॥

सुवर्णपात्रान्नसुपोषितोऽपि
  यथा परोच्छिष्टमपेक्षते श्वा ।
सभाजितश्चापि तथैव नीचः
  करोत्यसौ गौरवहीनकर्म ॥ ३४५ ॥

लोकाधिपत्ये समुपागतेऽपि
निषिद्धवाक्यं न वदन्ति सन्तः ।
ईषत्प्रवृद्धे निजभाग्यराशौ
आत्मानमिन्द्रं मनुते मदान्धः ॥ ३४६ ॥

रत्नाढ्यजाम्बूनदनिर्मितापि
स्यात्पादुका पादतलैकधार्या ।
धनेन पूर्णा अपि नीचमर्त्याः
स्वकर्मणा नीचपदैकयोग्याः ॥ ३४७

वाक्ये कटुत्वं हृदि निर्दयत्वं
परव्यथादर्शनमूलहर्षः ।
वृथाटनं शाश्वतकोपवत्ता
निन्देत्यमी नीचनरस्वभावाः ॥ ३४८

दिनैकमात्रागतमाप्तमित्र-
वदेव मत्वा मुदितो महान् स्यात् ।
नीचस्य भावो विपरीत एव
"नैदळ्" सुमाढ्याब्धिमुकूलपाल! ॥ ३४९ ॥

छिन्नैस्तृणौघैरभिवर्धितोऽपि
रथं न वोढुं वृषभः समर्थः ।

अवाप्तभाग्योऽप्यधमो मनुष्यः
स्वभावकृत्यैर्न भवेद्वरिष्ठः ॥ ३५० ॥

अधिकारः-36] [मौढ्य

बाल्येऽपि चार्थाद्विनिवृत्य यत्नात्
जितेन्द्रियाण्यात्तसुखो बुधः स्यात् ।
दुष्कृत्यमग्नस्य कुमार्गगन्तु-
रज्ञानिवृद्धस्य सुखं कथं स्यात् ॥ ३५१ ॥

भेकस्य देहस्थमलं न नश्येत्
सदा निमग्नेऽपि तटाकनीरे ।
अधीतशास्त्रः सततं सुसूक्ष्म-
बुध्या विना शास्त्ररसं न वेत्ति ॥ ३५२ ॥

वक्तुं यदेकस्य गुणं परोक्षे
जिहेति जिह्वा, पुरतोऽस्य दोषान् ।
वक्तुस्तथाऽज्ञस्य कृता तु केन
जिह्वा भवेत्, पर्वतदेशपाल! ॥ ३५३ ॥

दासीसमं मण्डयितुं स्वकायं
कुलस्त्रियो नैव बिदन्ति सम्यक् ।

दास्यः स्वयं मण्डनमूलशोभां
  प्रदर्श्य पुंसा सहिता रमन्ते ॥ ३५४ ॥

नीचाः परप्रेरणतः समस्तं
  कुर्वन्ति, तद्वद्दयाऽन्वितानाम् ।
साह्यं न कुर्वन्ति सतां, समस्तं
  कुर्वन्ति विद्रोहकृतां नराणाम् ॥ ३५५ ॥

स्मरेत् किरातो नगभाग्यवृद्धिं
  कृषीवलः सस्यभुवं स्मरेद्धि ।
सन्तः स्मरन्त्यन्यकृतोपकारं
  नीचाः स्मरन्त्यन्यकृतां स्वनिन्दाम् ॥ ३५६ ॥

एकोपकारं सुजनः स्मरन् वै
  शतापकारानपि विस्मरेत् सः ।
एकापकारस्मरणेन नीचो
  न मानयेत् सप्तशतोपकारान् ॥ ३५७ ॥

क्लेशेऽपि सद्भिः कृतधर्मकार्ये
  नीचो न कुर्यादपि भाग्यलाभे ।
दंष्ट्री यथा स्याद्गजवन्न वीरः
  सुभूषितैर्दन्तवरैर्युतोऽपि ॥ ३५८ ॥

अस्मिन् दिने वाद्य ततः कदाचित्
धनं भवेदित्यनुचिन्त्य तृप्ताः ।
अन्ते त्वलभ्यैतदपूर्णभावाः
सरोजपत्रेण समं व्यनश्यन् ॥ ३५९ ॥

विनाऽऽर्द्रभावं शिलया समानाः
सन्त्येव भाग्ये नितरां स्थितेऽपि ।
यथैव लोके जलजातशीत-
तद्धेतसान्तर्नहि चार्द्रता स्यात् ॥ ३६० ॥

## ७. नानानीतिबोधकाध्यायः

अधिकारः-37 ] [ नानानीत्यधिकारः

दिविस्पृशत्सौधतलाः सुरक्ष्याः
तत्रापि दीपाभरणाढ्यभार्याः ।
तथापि काम्या गुणिनी न चेत् सा
व्यर्था, स्मशानेन समं गृहं तत् ॥ ३६१ ॥

कृपाणभृत्सेवकरक्षिताश्च
चारित्र्यहीना यदि ता रमण्यः ।

स्यात्पूतता स्वल्पतमा हि तासा-
मपूतता स्याद्बहुकालदीर्घा ॥ ३६२ ॥

'मां घातये' त्युक्तवती यमी स्यात्
पाकं न कुर्याद्यदि सेयमाधिः ।
विना पतिं भक्षति चेत् पिशाची
तिस्रस्त्विमा भर्तृनिहन्तृसेनाः ॥ ३६३ ॥

'धिक्कृत्य मुञ्चे'ति सतां वचांसि
श्रुत्वाऽप्यबुध्वा मृतिवाद्यघोषम् ।
ऊढ्वा पुनर्भोगरतस्य मोहः
स्वशीर्षनिक्षिप्तशिलासमः स्यात् ॥ ३६४ ॥

श्रेष्ठस्तपोयत्नवताऽत्र वासः
स्थितिर्गृहिण्या सह मध्यमा स्यात् ।
स्वगौरवज्ञानविहीनमर्त्ये
वासो धनार्थे त्वधमो विभाव्यः ॥ ३६५ ॥

नयन्ति कालं पठनेन सन्तो
मध्या नयन्त्याप्तधनोपभोगात् ।
अपूर्णभोगानुभवादतृप्ता
नयन्ति कालन्त्वधमा विनिद्राः ॥ ३६६ ॥

च्छालिबीजाः पुनरेव शालि-
धान्यात्मतां यान्ति, सुशालिसस्यैः ।
सम्पूर्णकेदारसुदेशराजन्!
ज्ञानं पितुः संक्रमते हि पुत्रे ॥ ३६७

परम्पराढ्या गुणिनश्च खिन्नाः
नीचाश्च दासीतनया धनाढ्याः ।
लोकस्य वृत्तिस्त्वधरोत्तराऽभूत्
छत्रस्थदण्डस्थितितुल्यरूपा ॥ ३६८

सन्मित्रचित्तव्यसनं निशम्य
नो धारयेद्यो भुवि तस्य वासात् ।
शैलात् पतित्वा मरणं गरीयः
सुरत्नसन्निर्झरशैलपाल! ॥ ३६९ ॥

नूत्नप्रवाहः कुलटासु मैत्री
द्वयं समं स्याद्रचिते विमर्शे ।
वृष्ट्यां गतायां न नवप्रवाहो
नष्टे धने प्रेम न चास्ति तस्याः ॥ ३७०

दीपप्रकाशः कुलटानुरक्ति-
रिदं द्वयं भाति समं विमृष्टे ।
घृतक्षये नश्यति दीपकान्तिः
धनक्षये नश्यति रक्तिरस्याः ॥ ३७१ ॥

वाराङ्गना, प्रेमनिभेन "शैलात्
पतेव चावा"मिति पूर्वमूचे ।
'पादाधिना सञ्चलितुं न शक्ते'-
त्यसत्यमुक्त्वाऽद्य न चागमत् सा ॥ ३७२

स्वर्गे वसद्भिस्त्वमरैः सुवन्द्यो
रक्ताक्षविष्णुर्भवतात् तु साक्षात् ।
किन्त्वर्थहीनं किल पल्लवाङ्ग्यः
कुर्वन्ति दूरे कुलटाः प्रणम्य ॥ ३७३ ॥

नीलाक्षिणी प्रेमविहीनदासी
विषेण तुल्यं विधनं त्यजेत् सा
स्याच्चैलजीवी धनवान् यदेषा
तं शर्करावद्वृणुते क्रमेण ॥ ३७४ ॥

मीने च सर्पे क्रमशः स्वदेहं
प्रदर्श्य मीनः किल वञ्चयेत् तौ ।
तथा स्वकायात् जनवञ्चिकायाः
वेश्याः करौ वाञ्छति मूढबुद्धिः ॥ ३७५ ॥

"क्रौञ्चेन तुल्यौ मणिसूत्रतुल्या-
वावां युता"वित्यवदत् तु दासी ।
भिन्नाशया छागविषाणवत् सा
हे चित्त! किं सा तव वासयोग्या ॥ ३७६ ॥

सल्लिह्य गोवर्द्धनमाप्य तस्मात्
प्राप्तेऽथ कार्ये त्वसहायभूताः ।
पतद्बलीवर्दसमानवेश्याः,
तत्प्रीतिकामः परिहास्य एव ॥ ३७७ ॥

प्रदर्श्य रक्तिं कपटां जनेषु
लब्ध्वा धनं तानथ वञ्चयन्ति ।
वेश्याः स्वकार्यैकपरास्तदीय-
स्तनौ न वाञ्छेत् परलोककामः ॥ ३७८

चित्तेऽन्यविद्रोहमतिस्तु तस्याः
वाक्यं परं प्रत्ययदायकं स्यात् ।

मूढो नरस्तां मनुते स्वकीयां
वेश्या न कस्यापि भवेत् तु वश्या । ३७९ ॥

चित्तेऽस्ति कश्चिद्बहिरन्यपुंसि
प्रीतेव सा वञ्चयतीह वेश्या ।
विचारयन्तोऽपि रहस्यमेतत्
नरा न जानन्ति हि पापवश्याः । ३८० ॥

## २. सुखधर्माध्यायः

अधिकारः–39] [पतिव्रता

इन्द्राणितुल्यप्रथिताश्च साध्व्यो
भोगेच्छया पार्श्वमुपागतानाम् ।
यास्तेषु वश्या न भवन्ति रम्य-
फालास्तु ता भर्तृमनोऽनुकूलाः ॥ ३८१ ॥

दारिद्र्यकाले जलमात्रलभ्ये
नानाविधस्वीयजनागमेऽपि ।
या स्वीयधर्मात् च्यवते न वै सा
रम्यस्वरा लक्ष्यपतिव्रता स्यात् ॥ ३८२ ॥

द्वाराणि नाना परितस्तथोर्ध्वं
पतेत् तु वर्षासलिलं महच्च
गेहेऽत्र या स्वीयविधिं करोति
सा लोकवन्द्या गृहभाग्यभूता ॥ ३८३ ॥

पतीच्छया मण्डितकाययुक्ता
रम्या भयाढ्या स्वजनोपकर्त्री ।
सम्युज्य पश्चात्कृतविप्रलम्भैः
या तोषयेन्नाथमियं सती स्यात् ॥ ३८४ ॥

सदा मिलित्वा पथिभिः स्थिताश्च
लज्जायुताः स्मो नवसङ्गतुल्यम् ।
धनेच्छयाऽनन्तनरैः समेता
दास्यो रता भर्तृषु, किन्नु चित्रम्! ॥ ३८५ ॥

दातुः स्वहस्तकृतवित्ततुल्यं
सद्वीरहस्तस्थकृपाणतुल्यम् ।
विद्वज्जनाधीतसुशास्त्रतुल्यं
प्रशस्यते साध्विगतं महत्त्वम् ॥ ३८६ ॥

ग्राम्यो यथाऽज्ञातकुलुत्थभेदः
क्रीणाति मूल्येन समेन मूढः ।

पूर्वं तु दासीमनुभूय भर्ता
न स्नाति, मां चापि भुनक्त्यपूतः । ३८७ ॥

ढक्कास्थवामस्थलवद् वृथाऽस्मि
मा निन्द भर्तारमपेहि दूत! ।
ढक्कालसद्दक्षिणभागतुल्य-
फालाढ्यदासीर्व्रज, शंस सर्वम् ॥ ३८८ ॥

स्त्रीमक्षिकायाः पतिदेहसङ्गं
दृष्ट्वा पुरा मे सहनं न चाऽभूत् ।
आश्लिष्य वेश्यामनुभूतभर्तृ-
वक्षस्थलीमीक्ष्य सहेऽहमद्य ॥ ३८९

मालाधरो मे पतिरेति मामि-
त्यसत्यवाक्यं वद माऽत्र दूत! ।
इक्ष्वग्रतुल्या विरसाऽहमस्मि
वदेक्षुमध्यायितसारवेश्याम् ॥ ३९०

अधिकारः—40] सुखानुभवल

सङ्गो न चेद्देहविवर्णता स्यात्
योगे सदा श्रेष्ठतमो न कामः ।

त्यक्त्वाऽथ योगो रसपुष्टिमार्गो
    वीचीस्पृशच्छीतसुतीरपाल! ॥ ३९१ ॥

स्वनाथवक्षःस्थलसङ्गसौख्यं
    यासां न लभ्येत मुदा समेतम् ।
दिशासु वर्षद्घनजातशब्दः
    श्रूयेत तासां मृतिवाद्यरूपः ॥ ३९२ ॥

अहर्मुखे मादकहेतुभूते
    त्वन्विष्य पुष्पं ग्रथती स्वयं सा ।
"नाथे प्रयाते किमु मालये"ति
    निक्षिप्य मालामरुदत् सतीयम् ॥ ३९३ ॥

सायार्कमुद्दिश्य निजाश्रु हस्तैः
    सम्मार्जयन्ती च ,निजाङ्गुलीभिः ।
निर्दिश्य यातान् दिवसान्, स्वशय्या-
    माविश्य दोषं मम सा स्मरेत् किम् ॥ ३९४

नेत्रे प्रियाया मम मीनबुध्या
    विदार्य भोक्तुं त्वनुसृत्य पश्चात् ।
कार्येऽवतीर्णो भ्रुवमीक्ष्य चाप-
    भिया निवृत्तः किल मत्स्यघाती ॥ ३९५ ॥

रक्तोत्फलास्या तनुमध्यमा मे
    पुत्री पुरालक्तविभूषणं च ।

कृतं नासहताद्य पादौ
  बने शिलाढ्ये कथमत्र यातौ ॥ ३९६ ॥

अहर्मुखे रक्तदिशासमेते
  मनुस्म
उन्मुच्य मालां कुचचन्दनं च
  सम्मार्ज्य खिन्ना ह्यरुदत् प्रिया सा ॥ ३९७ ॥

"प्रियेण साकं विपिनं श्व एव
  किन्त्वं नु गच्छेरि"ति मामपृच्छः ।
क्रेता यथाश्वस्य तमारुरुह्य
  तच्चालनं तत्क्षण एव वेत्ति ॥ ३९८ ॥

मुक्ता कुचाभ्यां परिषस्वजे मां
  सुता पुरा, मे विदितो न हेतुः ।
जानेऽद्य चिह्नैर्मृगहन्तृसिंह-
  युते वने स्वीयगतेः कृतेति ॥ ३९९ ॥

काकं त्रिणेत्रं मम मातरं च
  राहुं विनिन्द्याद्य न कोऽपि लाभः ।
मन्नायको वित्तकृते च मार्गं
  यं प्राप मार्गः सखि! सो विनिन्द्यः ॥ ४०० ॥

ग्रन्थोऽयं समाप्तः

# நாலடியார்

## பொருளடக்கம்

# அறத்துப்பால்

## 1. துறவறவியல்

### அதிகாரம் 1—செல்வம் நிலையாமை

கடவுள் வாழ்த்து

வானிடு வில்லின் வரவறியா வாய்மையால்
காணிலந் தோயாக் கடவுளை—யாம்நிலம்
சென்னி யுறவணங்கிச் சேர்துமெம் உள்ளத்து
முன்னி யவைமுடிக என்று.

அறுசுவை யுண்டி அமர்ந்தில்லாள் ஊட்ட
மறுசிகை நீக்கியுண்டாரும் - வறிஞராய்ச்
சென்றிரப்பர் ஓரிடத்துக் கூழெனில் செல்வமொன்
றுண்டாக வைக்கற்பாற் றன்று
துகள்தீர் பெருஞ் செல்வம் தோன்றியக்கால் தொட்டுப்
பகடு நடந்தகூழ் பல்லாரோ டுண்க
அகடுற யார்மாட்டும் நில்லாது செல்வம்
சகடக்கால் போல வரும்.
யானை யெருத்தம் பொலியக் குடைநிழற்கீழ்ச்
சேனைத் தலைவராய்ச் சென்றோரும்—ஏனை
வினையுலப்ப வேறாகி வீழ்வர்தாம் கொண்ட
மனையாளை மாற்றார் கொள.
நின்றன நின்றன நில்லா எனவுணர்ந்து
ஒன்றின வொன்றின வல்லே செயின் செய்க
சென்றன சென்றன வாழ்நாள் செறுத்துடன்
வந்தது வந்தது கூற்று.
என்னொனும் ஒன்றுதம் கையுறப் பெற்றக்கால்
பின்னாவ தென்று பிடித்திரா—முன்னே
கொடுத்தார் உயப்போவர் கோடில்தீக் கூற்றம்
தொடுத்தாறு செல்லும் சுரம்.

இழைத்தநாள் எல்லை யிகவா பிழைத்தொரீஇக்
கூற்றம் குதித்துய்ந்தார் ஈங்கில்லை—ஆற்றப்
பெரும்பொருள் வைத்தீர் வழங்குமின் நாளைத்
தழீஇம் தழீஇம் தண்ணம்படும். 6

தோற்றம்சால் ஞாயிறு நாழியா வைகலும்
கூற்றம் அளந்துநும் நாளுண்ணும் ஆற்ற
அறஞ்செய்து அருளுடையீர் ஆகுமின் யாரும்
பிறந்தும் பிறவாதார் இல். 7

செல்வர்யாம் என்றுதாம் செல்வுழி யெண்ணாத
புல்லறி வாளர் பெருஞ்செல்வம்—எல்லில்
கருங்கொண்மூ வாய்த்திறந்த மின்னுப்போல் தோன்
மருங்கறக் கெட்டு விடும். 8

உண்ணான் ஒளிநிறான் ஓங்கு புகழ்செய்யான்
துன்னருங் கேளிர் துயர்களையான்—கொன்னே
வழங்கான் பொருள்காத் திருப்பானேல் அஆ
இழந்தானென் றெண்ணப் படும். 9

உடாஅதும் உண்ணாதும் தம்முடம்பு செற்றும்
கெடாஅத நல்லறமும் செய்யார்—கெடாஅது
வைத்தீட்டி னாரிழப்பர் வான்தோய் மலைநாட
உய்த்தீட்டும் தேனீக் கரி. 10

## அதிகாரம் 2—இளமை நிலையாமை

ரைவரும என் றெண்ணி நல்லறி வாளர்
ழவிடத்தே துறந்தார்—புரைதீரா
ஞஇளமை மகிழ்ந்தாரே கோலூன்றி
ஞங்கு எழுந்திருப்பார். 11

ட்புநார் அற்றன நல்லாரும் அஃகினார்
ற்புத் தளையும் அவிழ்ந்தன—உட்காணாய்
ாழ்தலின் ஊதியம் என்னுண்டாம் வந்ததே
ழ்கலத் தன்ன கலி. 12

சொற்றளர்ந்து கோலூன்றிச் சோர்ந்த நடையினராய்ப்
பற்கழன்று பண்டம் பழிகாறும்—இற்செறிந்து
காம நெறி படரும் கண்ணினூர்க் கில்லையே
ஏம நெறிபடரும் ஆறு. 13

தாழாத் தளராத் தலைநடுங்காத் தண்டூன்று
வீழா இறக்கும் இவள்மாட்டும்—காழிலா
மம்மர் கொள் மாந்தர்க்கு அணங்காகும் தன்கைக்கோ
அம்மனைக் கோல் ஆகிய ஞான்று. 14

எனக்குத்தாய் ஆகியாள் என்னையீங் கிட்டுத்
தனக்குத் தாய் நாடியே சென்றாள்—தனக்குத் தாய்
ஆகி யவளும் அதுவானுல் தாய்த் தாய்க் கொண்டு
ஏகும் அளித்திவ் வுலகு. 15

வெறியயர் வெங்களத்து வேல் மகன் பாணி
முறியார் நறுங்கண்ணி முன்னர்த் தயங்க
மறிகுள குன்டன்ன மன்று மகிழ்ச்சி
அறிவுடை யாளர் கண் இல். 16

பனிபடு சோலைப் பயன் மரம் எல்லாம்
கனியுதிர்ந்து வீழ்ந்தற் றிளமை—நனிபெரிதும்
வேற்கண்ணள் என்றிவளை வெஃகன்மின் மற்றிவளும்
கோற் கண்ணள் ஆகும் குனிந்து. 17

பருவம் எனைத்துள பல்லின்பால் ஏனை
இருசிகையும் உண்டீரோ என்று—வரிசையால்
உண்ணாட்டம் கொள்ளப் படுதலால் யாக்கைக் கோள்
எண்ணார் அறிவுடையார். 18

மற்றறிவாம் நல்வினை யாமிளையம் என்னாது
கைத்துண்டாம் போழ்தே கரவாது—அறஞ்செய்மின்
முற்றி யிருந்த கனியொழியத் தீவளியால்
நற்காய் உதிர்தலும் உண்டு. 19

ஆட்பார்த்து உழலும் அருளில் கூற்று உண்மையால்
தோட்கோப்புக் காலத்தால் கொண்டுய்ம்மின்—பீட்பி
பிள்ளையைத் தாயலறக் கோடலான் மற்றதன் [துக்கிப்
கள்ளம் கடைப் பிடித்தல் நன்று 20

## அதிகாரம் 3—யாக்கை நிலையாமை

மலைமிசைத் தோன்றும் மதியம் போல் யானைத்
தலைமிசைக் கொண்ட குடையர்—நிலமிசைத்
துஞ்சினார் என்றெடுத்துத் தூற்றப்பட் டாரல்லால்
எஞ்சினார் இவ்வுலகத்தில். 21

வாழ்நாட்கு அலகா வயங் கொளி மண்டிலம்
வீழ்நாள் படா அது எழுதலால்—வாழ்நாள்
உலவாமுன் ஒப்புரவு ஆற்றுமின் யாரும்
நிலவார் நிலமிசை மேல். 22

மன்றம் கறங்க மணப்பறை யாயின
அன்றவர்க்கு ஆங்கே பிணப்பறையாய்ப்—பின்றை
ஒலித்தலும் உண்டாமென்று உய்ந்துபோம் ஆறே
வலிக்குமாம் மாண்டார் மனம். 23

சென்றே யெறிப் வொருகால் சிறுவரை
நின்றே யெறிப பறையினை—நன்றேகாண்
முக்காலைக் கொட்டினுள் மூடித்தீக் கொண்டெழுவர்
செத்தாரைச் சாவார் சுமந்து. 24

கணங்கொண்டு சுற்றத்தார் கல்லென்று அலறப்
பிணங்கொண்டு காட்டுய்ப்பார்க் கண்டும்—மணங்
கொண்டீண்டு
உண்டுண்டுண் டென்னும் உணர்வினாற் சாற்றுமே
தொண்டொண்டொ டென்னும் பறை. 25

நார்த்தொடுத்து ஈர்க்கிலென் நன்றாய்ந்து அடக்கிலென்
பார்த்துழிப் பெய்யிலென் பல்லோர் பழிக்கிலென்
தோற்பையுள் நின்று தொழிலறச் செய்தூட்டும்
கூத்தன் புறப்பட்டக் கால். 26

படுமழை மொக்குளிற் பல்காலும் தோன்றிக்
கெடுமிதோர் யாக்கையென் றெண்ணித்—தடுமாற்றம்
தீர்ப்பேம்யாம் என்றுணரும் திண்ணறி வாளரை
நேர்ப்பார்யார் நீள்நிலத்தின் மேல். 27

யாக்கையை யாப்புடைத்தாப் பெற்றவர் தாம்பெற்ற
யாக்கையால் ஆய பயன்கொள்க—யாக்கை
மலையாடு மஞ்சுபோல் தோன்றிமற் றாங்கே
நிலையாது நீத்து விடும். 28

புல்நுனிமேல் நீர்போல் நிலையாமை யென்றெண்ணி
இன்னினியே செய்க அறவினை—இன்னினியே
நின்றான் இருந்தான் கிடந்தான்றன் கேள் அலறச்
சென்றான் எனப்படுத லால். 29

கேளாதே வந்து கிளைகளாய் இல்தோன்றி
வாளாதே போவரான் மாந்தர்கள்—வாளாதே
சேக்கை மரனொழியச் சேணீங்கு புட்போல
யாக்கை தமர்க்கொழிய நீத்து. 30

## அதிகாரம் 4—அறன் வலியுறுத்தல்

அகத்தாரே வாழ்வாரென்று அண்ணாந்து நோக்கிப்
புகத்தாம் பெறாஅர் புறங்கடை பற்றி
மிகத்தாம் வருந்தி யிருப்பரே மேலைத்
தவத்தால் தவஞ்செய்யா தார். 31

ஆவாம்நாம் ஆக்கம் நசைஇ அறம்மறந்து
போவாம்நாம் என்னாப் புலைநெஞ்சே—ஓவாது
நின்றுஞற்றி வாழ்தி யெனினும்நின் வாழ்நாள்கள்
சென்றன செய்வது உரை. 32

வினைப்பயன் வந்தக்கால் வெய்ய வுயிரா
மனத்தின் அழியுமாம் பேதை—நினைத்ததனைத்
தொல்லைய தென்றுணர் வாரே தடுமாற்றத்து
எல்லை யிகந்தொருவு வார். 33

அரும்பெறல் யாக்கையைப் பெற்ற பயத்தால்
பெரும்பயனும் ஆற்றவே கொள்க—கரும்பூர்ந்த
சாறுபோல் சாலவும் பின்னுதவி மற்றதன்
கோதுபோல் போகும் உடம்பு. 34

கரும்பாட்டிக் கட்டி சிறுகாலைக் கொண்டார்
துரும்பெழுந்து வேங்கால் துயராண்டு உழவார்
வருந்தி யுடம்பின் பயன்கொண்டார் கூற்றம்
வருங்கால் பரிவது இலர். 35

இன்றுகொல் அன்றுகொல் என்றுகொல் என்னாது
பின்றையே நின்றது கூற்றமென் றெண்ணி
ஒருவுமின் தீயவை ஒல்லும் வகையான்
மருவுமின் மாண்டார் அறம். 36

மக்களால் ஆய பெரும்பயனும் ஆயுங்கால்
எத்துணையும் ஆற்றப் பலவானால் — தொக்க
உடம்பிற்கே ஒப்புரவு செய்தொழுகாது உம்பர்க்
கிடந்துண்ணப் பண்ணப் படும். 37

உரக்கும் துணையதோர் ஆலம்வித்து ஈண்டி
இறப்ப நிழற்பயந் தாஅங்கு — அறப்பயனும்
தான்சிறி தாயினும் தக்கார்க்கைப் பட்டக்கால்
வான் சிறிதாப் போர்த்து விடும். 38

வைகலும் வைகல் வரக்கண்டும் அஃதுணரார்
வைகலும் வைகலை வைகுமென்று இன்புறுவர்
வைகலும் வைகல்தம் வாழ்நாள்மேல் வைகுதல்
வைகலை வைத்துணரா தார். 39

மான அருங்கலம் நீக்கி யிர வென்னும்
ஈன இளிவினால் வாழ்வேன்மன் — ஈனத்தால்
ஊட்டியக் கண்ணும் உறுதி சேர்ந்து இவ்வுடம்பு
நீட்டித்து நிற்கும் எனின். 40

## அதிகாரம் 5 தூய தன்மை

மாக்கேழ் மடநல்லாய் என்றரற்றும் சான்றவர்
நோக்கார்கொல் நொய்யதோர் துச்சிலை — யாக்கைக்கோர்
ஈச்சிறகு அன்னதோர் தோல்அறினும் வேண்டுமே
காக்கை கடிவதோர் கோல். 41

தோற்போர்வை மேலும் துளைபலவாய்ப் பொய்ம் மறைக்கும்
மீப்போர்வை மாட்சித்து உடம்பானால்—மீப்போர்வை
பொய்ம் மறையாக் காமம் புகலாது மற்றதனைப்
பைம்மறியாப் பார்க்கப்படும். 42

தக்கோலம் தின்று தலைநிறையப் பூச்சூடிப்
பொய்க்கோலம் செய்ய வொழியுமே—எக்காலும்
உண்டி வினையுள் உறைக்கும் எனப் பெரியோர்
கண்டுகை விட்ட மயல். 43

தெண்ணீர்க் குவளை பொருகயல் வேலென்று
கண்ணில்புன் மாக்கள் கவற்ற விடுவேனோ
உண்ணீர் களைந்தக் கால் நுங்குசூன் றிட்டன்ன
கண்ணீர்மை கண்டொழுகு வேன் 44

முல்லை முகைமுறுவல் முத்தென்று இவைபிதற்றும்
கல்லாப்புன் மாக்கள் கவற்ற விடுவேனோ
எல்லாருங் காணப் புறங்காட்டு உதிர்ந்துக்க
பல்லென்பு கண்டொழுகு வேன். 45

குடரும் கொழுவும் குருதியும் என்பும்
தொடரும் நரம்பொடு தோலும்—இடையிடையே
வைத்த தடியும் வழும்புமாம் மற்றிவற்றுள்
எத்திறத்தாள் ஈர்ங்கோதை யாள். 46

ஊறி யுவர்த்தக்க வொன்பது வாய்ப்புலனும்
கோதிக் குழம்பலைக்கும் கும்பத்தை—பேதை
பெருந்தோளி பெய்வளாய் என்னுமீப் போர்த்த
கருந்தோலால் கண் விளக்கப் பட்டு. 47

பண்டம் அறியார் படுசாந்தும்கோதையும்
கண்டுபா ராட்டுவார் கண்டிலர்கொல்—மண்டிப்
பெடைச் சேவல் வன் கழுகு பேர்த்திட்டுக் குத்தல்
முடைச்சாகாடு அச்சிற் றுழி. 48

கழிந்தார் இடுதலை கண்டார் நெஞ்சு உட்கக்
குழிந்தாழ்ந்த கண்ணவாய்த் தோன்றி—ஒழிந்தாரைப்
போற்றி நெறிநின்மின் இற்றிதன் பண்பென்று
சாற்றுங் கொல் சாலச் சிரித்து. 49

